


वेङ्कामात्यविरचितः

# रुक्मिणीमाधवाङ्कः

# RUKMIṆĪMADHAVAṄKA

OF

# VEṄKĀMĀTYA

*General Editor* :

DR. K. RAJAGOPĀLĀCHĀR, M.A., Ph.D.

*Editor* :

B. MAMATHA, M.A.

*Under the Guidance of* :

VIDWAN H. S. PHATAK, M.A.

प्राच्यविद्यासंशोधनालयः, मैसूरु

ORIENTAL RESEARCH INSTITUTE, MYSORE

1991

*Price* : Rs. 5–50

UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES No. 174

मैसूरु विश्वविद्यानिलयः

प्राच्यविद्यासंशोधनालयग्रन्थमाला–१७४

# RUKMIṆĪMĀDHAVĀṄKA

OF

VEṄKĀMĀTYA

वेङ्कामात्यविरचितः

# रुक्मिणीमाधवाङ्कः

ORIENTAL RESEARCH INSTITUTE, MYSORE

प्राच्यविद्यासंशोधनालयः, मैसूरु

1991

First Edition 1991



Copies : 1000

Published by :

ORIENTAL RESEARCH INSTITUTE,
University of Mysore,
MYSORE.

Printed at :

Sree Kantha Enterprises
561, 2nd Ramachandra Agrahar
MYSORE-4

UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES 174

# RUKMIṆĪMĀDHAVĀṄKA

OF

VEṄKĀMĀTYA

General Editor :

Dr. K. RAJAGOPALACHAR, M.A., Ph.D.
Director, Oriental Research Institute. Mysore and
Professor and Chairman, Department of P.G. Studies
and Research in Sanskrit, Manasagangothri, Mysore.

ORIENTAL RESEARCH INSTITUTE
MYSORE 570 005
1991

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला – १७४

वेङ्कामात्यविरचितः

# रुक्मिणीमाधवाङ्कः

प्रधानसम्पादकः

डा० के. राजगोपालाचार्यः, एम्.ए., पिहेच्.डि.
प्राच्यविद्यासंशोधनालयनिर्देशकः
स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागस्य
प्राध्यापकः, मुख्यश्च, मानसगङ्गोत्री
मैसूरु विश्वविद्यानिलयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु

1991

ORIENTAL RESEARCH INSTITUTE

SERIES 174

# RUKMIṆĪMĀDHAVAṄKA

OF

VEṄKĀMĀTYA

Edited by :

B. MAMATHA, M.A.
Research Assistant
Oriental Research Institute, Mysore.

Under the Guidance of

Prachya Samshodhana Pandita H. S. PHATAK, M.A.
Dharmashastra Vidwan, Sahitya Siromani, Kalanipuna
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE 570 005
1991

प्राच्यविद्यासंशोधनालयग्रन्थमाला – १७४

वेङ्कामात्यविरचितः

# रुक्मिणीमाधवाङ्कः

सम्पादिका

बि. ममता, एम्.ए.

संशोधनसहायिका

प्राच्यविद्यासंशोधनालयः, मैसूरु

मार्गदर्शकः

प्राच्यसंशोधनपण्डितः एच्. एस्. फाटक्, एम्.ए.

धर्मशास्त्रविद्वान् , साहित्यशिरोमणिः, कलानिपुणः

सहायकसंशोधकः I

प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु

1991

# FOREWORD

It is heartening to present one more play of Veṅkāmātya who served as minister under the rule of Rani Vīrammāji and Hyder Ali. The Oriental Research Institute, Mysore has in its project the publication of all the works of Veṅkāmātya, along with the works of others too. The Institute has already published Vīrarāghava, a vyāyoga, Lakṣmīsvayamvara—a Samavakāra and Sītākalyāṇa, a Vīthī. The present work Rukmiṇīmādhava is an aṅka or utsṛṣṭikāṅka variety of dramatic composition. It deals with the story of the marriage of Rukmiṇī with Mādhava (Kṛṣṇa) and how far the play conforms to the characteristics of utsṛṣṭikāṅka, the readers would be able to know by reading the work itself.

The present edition has been critically prepared by Smt. Mamatha, a Research Assistant, under the brilliant guidance of Vidwan H. Shankar Ganapati Phatak, a senior scholar of the Research Institute. The editor has brought out the text as a maidenly attempt by collating four manuscripts preserved in the Institute and has followed the principles of textual criticism by noting the different readings and fixing up her preferences in many a place. She richly deserves compliments for having brought out the text. I only wish that many more works would find publication with the same enthusiasm.

Our beloved Vice-chancellor of the University of Mysore Dr. (Mrs.) P. Selvie Das has been evincing keen interest

in the growth of researeh—minded seholars. But for her encouraging words, the creative activities of the Oriental Research Institute, Mysore would have become paralysed. I offer my grateful thanks to her. Prof. V. K. Nataraj, Registrar, Dr. Belliappa, Deputy Registrar, G. E. Rugi, Finance Officer, and other officials of the University of Mysore have been very co-operative by lending a helping hand to carry out the academic programme of the Institute. My thanks are due to them and to all others who have been encouraging us in our activities.

Our learned readers richly deserve our profound sense of gratitude for, without them, the love of transmission of knowledge would find no place. The Director, Mysore University Printing Press and Sri K. V. Sampathkumar of Sree Kantha Power Press are hearby thanked for having co-operated in getting this text printed nicely.

K. RAJAGOPALACHAR
Director

# प्रस्तावना

भारतीयसंस्कृतसाहित्यं, वैदिकसाहित्यं लौकिकसाहित्यं इति द्विधा भिद्यते । तत्र वैदिकसाहित्ये वेदाः उपनिषदः ब्राह्मणानि आरण्यकानि वेदाङ्गनि च अन्तर्भवन्ति । लौकिकसाहित्ये तु नाट्यशास्त्रं अलङ्कारशास्त्रं काव्यानि इति बहवो भेदाः दृश्यन्ते । तत्र काव्यं दृश्यकाव्यं, श्रव्यकाव्यं इति द्विविधम् । श्रव्यकाव्यं पद्यात्मकं गद्यात्मकं तदुभयात्मक-मिति त्रिविधम् । दृश्यकाव्यमपि रूपकोपरूपकभेदेन द्विविधम् । नाटकं रूपकस्य एकः प्रभेदः । किन्तु सामान्यतया व्यवहारे रूपक-समुदायं बहवः नाटकमित्येव व्यपदिशन्ति । नाटके तत्तत्कालिकजनतायाः व्यवहारान् पश्यामः । दृश्यकाव्येषु नाट्याङ्गानि विशेषतया सम्बद्धानि दृश्यन्ते । अत एव महाकविः कालिदासः "नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनं" इति नाट्यं प्रशंसति ।

नाटकस्य प्रयोजनं नाट्यशास्त्रकारः भरतमुनिः इत्थं निरूपयति—

उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ।
हितोपदेशजननं धृतिक्रीडासुखादिकृत् ॥
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम् ।
विश्रामजननं काले नाट्यमेतद्भविष्यति

नाट्यशास्त्रं अ. १ (श्लो. ११२, ११३)

वस्तुपालरसाङ्कभेदेन रूपकाणि नाटकं, प्रकरणं, भाणः, प्रहसनं, डिमः, व्यायोगः, समवकारः, वीथी, अङ्कः, ईहामृग इति दशधा विभज्यन्ते । उपरूपकाणि च नाटिका, त्रोटकं, गोष्ठी, सट्टकं, नाट्यरासकं,

प्रस्थानकं, उल्लाप्यं, काव्यं, प्रेङ्खणं, रासकं, संलापकं, श्रीगदितं, शिल्पकं, विलासिका, दुर्मल्लिका, प्रकरणिका, हल्लीशः, भाणिका इति अष्टदश प्रकारेण भिद्यन्ते ।

अङ्कः रूपकस्यैव एकः प्रकारः । आलङ्कारिकः विश्वनाथः अङ्कस्य लक्षणं इत्थं निरूपयति ।

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ॥
प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ।
भाणवत्सन्धिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ ।
युद्धं च वाचा कर्तव्यं निर्वेदवचनं बहु ।

—साहित्यदर्पणः परि. ६

धनञ्जयस्तु

उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत् ।
रसस्तु करुणः, स्थायी नेतारः प्राकृता नराः ।
भाणवत्सन्धिवृत्त्यङ्गैर्युक्तः स्त्रीपरिदेवितैः ।
वाचा युद्धं विधातव्यं तथा जयपराजयौ ।

दशरूपकं तृ. प्रकाशः
श्लो. ७०-७१

भाणवत्सन्धिवृत्यङ्गैरित्यनेन भारतीवृत्तिः मुखनिर्वहणसन्धिसन्ध्यङ्गानि लास्याङ्गानि निवेश्यन्ते ।

रुक्मिणीमाधवाख्यस्याङ्कस्य कर्ता वेङ्कामात्यः । स अङ्कस्य लक्षणमनुसृत्य रूपकमिदं आरचयत् । अङ्के रुक्मिणीमाधवयोः विवाह एव कथावस्तु । इदं वस्तु प्रख्यातम् । अस्य नायकः माधवः । स एव श्रीकृष्णः । रुक्मिणी वैदर्भराजस्य नन्दिनी । शिशुपालः प्रतिनायकः ।

सः रुक्मिणीं परिणेतुं मनश्चकार इति विषयं ज्ञात्वा सा अतीव दुःखिता अभूत् । शिशुपालः तस्या इच्छां तिरस्कृत्य तां अपहर्तुं निश्चितवान् । तं विषयं ज्ञात्वा सा ब्राह्मणस्य हस्ते माधवं प्रति एकं पत्रं प्रेषितवती । माधवः तस्याः दुःखनिवारणार्थं तां अपहृतवान् । अन्ते तयोः पाणिग्रहणमहोत्सवः वसुदेवभीष्मकादीनां पुरतः प्रचलितः ।

कविर्वेङ्कामात्यः स्वस्य ग्रन्थस्य कथावस्तु, हरिवंश—भागवत-पद्मपुराणेभ्यः स्वीकृतवान् । परन्तु अत्रत्या कथा केषुचित् स्थलेषु मूलतः भिद्यते । रूपकौचित्यसम्पादनार्थं कविना वस्तुन्यासः कृतो भवेत् ।

भागवतकथासारः—

भागवते तु रुक्मिणी माधवस्य रूपगुणादिकं श्रुत्वा तं परिणेतुं अनेकानि व्रतानि कर्तुं प्रारभत । माधवः कंसस्य भृत्यः इति मत्वा तस्याः सहोदरः रुक्मी तां शिशुपालाय दातुं निश्चितमतिरासीत् । अतः सा ब्राह्मणहस्ते माधवाय सन्देशं प्रेषितवती । किन्तु भागवतस्य व्याख्याता काशीनाथोपाध्यायः स्वस्य तोषणीसाराख्ये व्याख्याने "रुक्मिणी ब्राह्मणेन सह एकं पत्रमेव प्रेषितवती" इति स्पष्टयति । स च सन्देशः नितरां हृद्यो वर्तत इति तमत्रोल्लिखामि ।

श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताविशति चित्तमपत्रपं मे ॥

का त्वं मुकुन्द महतीकुलशीलरूप-
विद्यावयोद्रविणधामभिरात्मतुल्यम् ।

धीरा पतिं कुलवती न वृणीत कन्या
 काले नृसिंह नरलोकमनोभिरामम् ॥

तन्मे भवान् खलु वृतः पतिरङ्ग जाया-
 मात्मार्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीर भागमभिमर्शतु चैद्य आराद्
 गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥

पूर्तेष्टदत्तनियमव्रतदेवविप्र-
 गुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं
 गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥

श्वोभाविनि त्वमजितोद्वहने विदर्भान्
 गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेशबलं प्रसह्य
 मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥

अन्तःपुरान्तरचरीमनिहत्य बन्धून्
 त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा
 यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥

यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
 वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
 जह्यामसून् व्रतकृशान् शतजन्मभिः स्यात् ॥

(भा. द. स्क. अ. ५२ श्लो. ३७-४३)

ब्राह्मणेन स्वादेशानुसारं पठितं सन्देशमिमं श्रुत्वा कृष्णः तस्याः रक्षणार्थं अपहरणार्थं च भीष्मकपुरं अगच्छत्। तत्र तां अपहृत्य आगच्छतो माधवस्य मार्गे रुक्मिणा सह युद्धं समजायत। स च युद्धे रुक्मिणं निर्जित्य रुक्मिण्या सह द्वारकां प्राविशत्। तयोः विवाहमहोत्सवः वसुदेवादिप्रमुखानां पुरतः विजृम्भितोऽभूत्।

हरिवंशकथासारः —

अत्र माधवः रुक्मिण्याः रूपशीलादिकमधिकृत्य अन्यमुखेन शृणोति। रुक्मी भगिन्याः रुक्मिण्याः विवाहं शिशुपालेन सह कारयितुं निश्चितवान्। माधवः कंसस्य प्रेष्य इति मत्वा माधवं सः तिरस्कृतवान्। शिशुपालः माधवस्य पितृष्वसुः श्रुतश्रवस्याः पुत्रः। पितृष्वसुः प्रीतिसम्पादनार्थं माधवबलरामौ विवाहमहोत्सवं गच्छतः। स्वविवाह-सन्दर्भे देवालयं प्रति गन्तुं बहिः आगतां रुक्मिणीं माधवः पश्यति। तौ परस्परं अनुरक्तौ भवतः। तां अपहृत्य माधवः रथेन द्वारकां प्रति प्रस्थितवान्। स च मार्गे वैरिणा रुक्मिणा सह युध्यति। तं निर्जित्य माधवः पुरं प्रविशति।

पाद्मपुराणकथासारः —

रुक्मिणी माधवे अनुरक्ता भवति। सा च माधवप्राप्त्यर्थं अनेकानि व्रतानि आचरति। रुक्मी शिशुपालेन सह तस्याः विवाहं कारयितुं निश्चितवान्। सा तु ब्राह्मणद्वारा माधवाय सन्देशं प्रेषितवती। माधवः तस्याः दुःखं परिहर्तुं भीष्मकपुरीं आगत्य तां अपहृत्य मार्गे रुक्मिणा सह संयुध्य तं च निर्जित्य स्वपुरीं प्रविशति।

कविर्वेङ्कामात्यः भागवतपुराणं आदृत्य केषुचित् स्थलेषु परिवर्तनं च कृत्वा एतदङ्कं व्यरचयत्। माधवः दारुकेण सह भीष्मकपुरीं गत्वा

रुक्मिणीं सखीं च अपहृतवान् । युद्धस्य वर्णनं त्वत्र लक्षणानुगुणं केवलं नेपथ्ये श्रुणुमः । दृश्यकाव्यस्य अङ्कस्य लक्षणानुसारेण तच्छोभाभिवृद्धयर्थं सरलेन मार्गेण कथावस्तु प्रतिपादितम् । सखीरुक्मिणीसंवादे करुण-रसः सम्यक् प्रतिपादितो दृश्यते । कविः शृङ्गाररसपूर्वकं अङ्कं समापयति ।

**कविविषयः —**

अस्य अङ्कस्य निर्माता कविः वेङ्कप्पय्यः, वेङ्कामात्यः, वेङ्कय्यः, वेङ्कभूपतिः, वेङ्कसूरी इति अनेकैः नामभिः प्रसिद्धोऽस्ति । सः कर्णाटकदेशीयः । रामपुरी इत्याख्यो ग्रामः तस्य वासस्थलम् । सः भारद्वाजगोत्रोद्भवः । वागाम्बिकाहम्पयाख्यौ तस्य मातापितरौ । विषयोऽयं तस्य सर्वेषु रूपकेषु प्रतिपादितः अस्ति ।

विश्वानन्दिनि भौनभार्गवकुले दुग्धांबुधौ प्रोज्ज्वले
हंपार्याभिधमन्त्रिणस्समुदितो वागाम्बिकागर्भतः ।
आजन्मप्रथमानमानविलसत्सौशील्यसाम्राज्यभू-
र्वेंकप्पप्रभुरुन्नतो गुणगणैस्सोऽयं न केन श्रुतः ॥

कामविलासभाणः

सः भगवतः श्रीरामस्य परमभक्तः । तस्य हनूमति दृढो विश्वासः । अमुं विषयं प्रति अस्यैव पद्यमेकं पश्यामः—

यः श्रीरामपुरीविलासवसतिः श्रीरामकारुण्यदृक्
प्राप्तैश्वर्यपदश्चतुर्दशकलाधौरन्धरीबन्धुरः ।
यस्मिन् विस्मयनीयपावनकपोल्लासो वसत्यन्वहं
यं प्राप्यैव रमा समानमधिपं पातिव्रतीं विन्दति ॥

**कवेः कालः —**

वेङ्कप्पय्यस्य कालः क्रि. श. १८ शशतकः । सः महिशूरु राज्ञां इम्मडि कृष्णराज ओडेयर् (१७३४–१७६६) नञ्जराज ओडेयर् (१७६६–१७७०) बेट्टद चामराज ओडेयर् (१७७०–१७७६) इत्याख्यानां राज्यभारसमये आसीदिति ज्ञायते । प्रथमतः नाम्नैव केवलं प्रधानः आसीत् । पश्चात् सः हैदरालिसमीपे प्रधानपदवीमलञ्चकारेति इतिहासः प्रसिद्धः । सः वीरम्माजी राज्ञ्याः (क्रि. श. १७५७) अमात्यः आसीत् । सा तदनन्तरं तं वेङ्कामात्यं 'होसङ्गडि' इति नाम्ना प्रसिद्धं स्थलं प्रति समप्रैषयत् । तस्य समग्रं जीवनं वीरम्माजीराज्ञ्याः हैदरालेः च राजकीयकार्येषु निमज्जितं आसीत् । सः तस्य राजकीय-प्रावीण्ये 'प्रधान' पदवीं समारूढ आसीत् । तथापि सः 'वेङ्कामात्य' इत्येव प्रसिद्धिं प्राप ।

वेङ्कामात्यः प्रसिद्धः राजकार्यपटुः । तस्य चातुर्येणाकर्षितः हैदरालिः तं 'श्रीरङ्गपट्टनं' प्रति नीतवान् । हैदरालेः आज्ञां अङ्गीकृत्य सः कर्णाटकराज्ये शिवमोग्गामण्डलस्थ 'बिदनूर' नगर्याः शासको बभूव । सः सन्धिचतुरश्चासीत् । अत एव क्रि. श. १७७४ तमे हैदरालिः मराठाधिपेन रघुनाथरावेण साकं सन्धिनिष्पादनार्थं तं वेङ्कामात्यं पूनानगरीं प्रति अप्रैषयत् ।

वेङ्कामात्यस्य जीवितकालः सुखमयः नासीत् । तस्य अन्तिमदिनानि दुःखप्रदानि सञ्जातानि । यस्मिन् परमनिष्ठः सन् अयममात्यवर्यः सेवां चकार स एव वेङ्कामात्यस्य विषये असन्तुष्टः अभवत् । वेङ्कामात्यः स्वाधिकारस्थानस्य दुरुपयोगं चक्रे इति तस्मिन् मिथ्यापवादं आरोप्य हैदरालिः तं प्रधानीस्थानात् प्रच्याव्य कारागृहं अप्रैषयत् । तदनन्तरं तस्य निरपराधित्वं ज्ञात्वा तं कारागृहात् मोचयामास । केवलं प्रधान-

विरुदाङ्किताय तस्मै हैदरालिः मासि मासि एकसहस्ररूप्यकपरिमितवेतनं ददन्नासीत् । *वेङ्कामात्यः क्रि. श. १७८३ वत्सरे मधुमेहरोगपीडितः यशश्शरीरी बभूव ।

सः राजकार्यप्रवृत्तोऽपि साहित्यस्य सेवामपि निरातङ्कं विशिष्य चाकरोत् । तथा च विशिष्टान् बहून् ग्रन्थानपि रचयामास ।

**वेङ्कामात्यस्य कृतयः —**

प्रधानिवेङ्कामात्यस्य संस्कृतकर्णाटभाषामयाः ग्रन्था अनेके राजन्ते । रूपकप्रभेदे सः नाटकं प्रकरणं इति भेदद्वयं विहाय बाणडिमव्यायोगसमवकारवीथ्यङ्केहामृगानां लक्ष्यग्रन्थान् चकार । सः अलङ्कारलक्षणग्रन्थं कर्णाटकभाषाकाव्यान्यपि व्यरचयत् । तेषां नामानि चेत्थं वर्तन्ते ।

| | कृतयः | प्रभेदाः |
|---|---|---|
| (१) | कामविलासभाणः | रूपकम् |
| (२) | महेन्द्रविजयडिमः | ,, |
| (३) | वीरराघवव्यायोगः | ,, |
| (४) | लक्ष्मीस्वयंवरसमवकारः (विबुधदानवसमवकारः) | ,, |
| (५) | सीताकल्याणवीथी | ,, |
| (६) | रुक्मिणीमाधवाङ्कः | ,, |
| (७) | कुक्षिम्बरभैक्षवप्रहसनम् | ,, |
| (८) | ऊर्वशीसार्वभौमेहामृगः | ,, |
| (९) | अलङ्कारमणिदर्पणम् | अलङ्कारलक्षणग्रन्थः |
| (१०) | कुशलवचम्पूः | चम्पूकाव्यम् |

---

* History of Mysore Ed. C. Hayavadana Rao Vol-II Chap. XIII P.P. 480.

| कृतयः | | प्रभेदाः |
| --- | --- | --- |
| (११) | सुधाझरी | गद्यम् |
| (१२) | जगन्नाथविजयकाव्यम् | पद्यम् |
| (१३) | इन्दिराभ्युदयम् | ,, |
| (१४) | हनूमद्विलासः | ,, |
| (१५) | हनूमच्छतकम् | स्तोत्रम् |
| (१६) | सूर्यशतकम् | ,, |
| (१७) | कर्णाटरामायणम् | कर्णाटभाषाकाव्यम् |
| (१८) | सीताविवाहनाटकम् | ,, |
| (१९) | हनूमज्जयकाव्यम् | ,, |

वेङ्कामात्यस्य शैली सरला मधुरा च वर्तते । विविधैः वृत्तैः रचिताः तस्य ग्रन्थाः अलङ्कारमया दृश्यन्ते ।

एतद्ग्रन्थसम्पादनकर्मणि समुचितनिर्देशनादिभिः महोपकारं कृतवद्भ्यः निर्देशकेभ्यः डा० के. राजगोपालाचार्यमहाभागेभ्यः तथा उपनिर्देशकेभ्यः विद्वद्भ्यः पण्डितरत्नं, वेदान्तभूषणं इति बिरुदविभूषितेभ्यः आर्. जि. माळगि, एं.ए. इत्येभ्यश्च कृतज्ञतां सूचयामि ।

॥ श्रीः ॥

॥ श्रीगणाधिपतये नमः ॥

श्रीवेङ्कामात्यविरचितः

# रुक्मिणीमाधवाङ्कः

आनन्दैकरसाश्रयोऽपि विबुधैराराधितोऽप्यादरात्
आविर्भूततनुर्बभूव[1] भुवनं पातुं कृपातुन्दिलः[2] ।
योऽसावारचयद्वि[3]डम्बनमपि प्रायो मनुष्याकृतेः
सोऽयं ध्येयपदं[4] भवत्वनुकलं सीतैकतानो विभुः ॥ १ ॥

अपि च—

योऽदत्त प्रणतिं[5] समस्तविभवे[6] रामाय बद्धाञ्जलिः
सीतायै मणिमुद्रिकामपि यशः[7]*सेतुं कपीनामपि ।

---

* सर्वासु मातृकासु 'अपयशः सेतुं' इति पाठः अस्ति । सः पाठः अशुद्धः इति भाति । 'अपि यशःसेतुं' इति पाठः अर्थदृष्ट्या समीचीन इति भावयामः ।

1 तनुथबभूव—क. (?)
2 तुण्डिलः—क.ख.ग.घ.
3 रचद्वि—क. (?)
रचयवि—ख. (?)
4 धेयपदं—क.ख.
5 प्रणीतं—क.
6 विभवा—घ.
7 मसयशः—क.

रक्षोराजमुखे[1] चपेटमपि यः[2] श्रेयस्त्रिलोके[3] सदा[4]
अक्षीणां[5] श्रियमातनोतु[6] हनुमानक्षादिशिक्षाचणः ॥ २ ॥

नान्द्यन्ते सूत्रधारः—

(अञ्जलिं[7] बध्वा—)

कुशलित[8]सभास्ताराणां
कुट्मलित[9]कराम्बुज[10]ः कृपां याचे ।
फलमामनन्ति रसिकाः
प्राक्तनसुकृतोत्करस्य यामेव ॥ ३ ॥

(निपुणं निर्वर्ण्य—)

अमी[11] किल सकललोकाभिनन्द्य[12]समञ्जसयशोमतल्लिका[13]निकायसमाक्रान्त-जगदुपघ्न[14]पादपस्य[15] पदपद्माराधकस्वकनिकुरुम्ब[16]सम्भरणदीक्षा[17]भृत[18]करप्रति-

---

1 रक्षोजरामुखे—क.
2 मपि च— ख.घ.
3 लोकी—क.ख.ग.घ.
4 सदा—ख.घ.
5 अक्षीण—ग.घ.
6 माननोतु—क.ग.
7 अञ्जलीं— घ.
8 कुशल—ख.घ.
9 कुड्मलित—क.ख.घ.
10 पराम्बुजः—ख.
11 अहो !—ग.
12 भिवन्द्य—क.
13 मल्लिका—घ.
14 दुपघ्ना—घ.
15 पादस्य—क.ख.ग.
16 निकुरम्ब—ग.
17 वीक्षा—ख.घ.
18 द्दत—क.ग.

सरस्य शरपवन[1]निरस्तसमस्तविपक्षतति[2]प्रतीतितूल[3]जालस्य निरालस्य परित्रात-शरणागतरावणानुजन्मनः मनोजात[4]दशायातातथ्य[5]निरूपण[6]रमानुरूपरूप-सम्प[7]दुदयस्य सदयावलोकसमाटीकन[8]सुधाप्रसार[9]निरस्तसुग्रीव[10]सुखावग्र-हस्य सरहस्याम्नायाम्नातमहिम्नः[11] श्रीरामनगरधाम्नः[12] श्रीरामनाम्नः[13] परब्रह्मणः प्रवर्तमानप्रसून[14]समयमहोत्सवदिदृक्षया[15] कौतूहलतरङ्गितहृदः[16] सहृदयहृदया-ह्लाद[17]लहरीपरिपोषण[18]निर्दूषण[19]सकलकलाकलापो[20]पलम्भन[21]सम्भृतमुदः[22] शुभ-रतभरतमतानुसारि[23]विसारि[24] भरतविद्यान[25] वद्यकाञ्चनविवेचननिकषायमाण[26]-मनीषासम्पदः सर्वे सभासदः।

---

1 शरस्यदपवन—क.ग.घ.म.
2 स्तपक्षस्तुति—क.
स्तपक्षस्तति—घ.
3 कुल—क.
4 मनोजतात—क.म.
5 यातथ्य—क.
6 थ्यरूपण—क.
7 नुरूपसम्प—क.
8 समाजाठङ्क—क.
सटीक—ग.म.
समाटीलोकन—घ.
9 सन्धानप्रसर—क.
10 सूत्रीव—क.
11 महिम्नं—ग.
12 धाम्न—ग.
13 'श्रीरामनाम्नः' इति—घ. प्रतौ नास्ति।
14 प्रसूत—क.ख.
15 दिदृक्षा—ख.ग.घ.म.
16 हृदयः—ख. हृदः य—ग.
17 सहृदयाह्लाद—क.ग.
18 परितोषण—घ.
19 निर्धुषण—ख.
20 कलालापो—क.
21 लम्भव—क. लम्भवं—ग.
लम्भ—घ.
22 मदः—घ.
23 शुभारतमतानुसारि—क.
24 विसारी—ख.ग.घ.
25 विद्याविन—क.म.
26 यमान—घ.म.

तदेनाननुसृत्य[1] तन्मनोवृत्त्यनुरूपश्रूपकाभिनयेन परितोषयिष्यामि इति ।

(परिक्रम्य—आकाशे कर्णं दत्त्वा—)

किं ब्रूथ ?

प्रख्यातवृत्तपरिकर्मितमञ्जुलाङ्गं
प्रत्यग्रजातनवनीतमिवाकलङ्कम् ।
आविष्कुरु प्रथितरूपकमारविन्द-
मारन्द[3]मर्दनकलाविरुदाङ्क[4]मङ्कम् ॥ ४ ॥

अहो ! चिरेण सार्थता[5] कलाविलासस्य[6] । यदेषा मनोरथानुसारिणी वाणी ।

तथाहि—

विभूषणं[7] तदेवाहुर्विद्यावैशद्य[8]सम्पदः ।
लक्षीकरणमेतस्याः[9] साक्षाद्रसिकसंसदः[10] ॥ ५ ॥

किन्तु तादृशरूपकान्वेषणे[11] गृहिणीसहायो भवामि ।

(इति नेपथ्याभिमुखो भूत्वा)

---

1 नामुपसृत्य—ख.घ.
2 तन्मनोनुरूप—क.म.
3 मानन्द—क.ख.ग.म.
4 विरुदांशक—ख.
5 सार्धता—क.ख.ग.म.
6 विलास्य—क.
7 विभीषणं—ख.
8 विद्यावैसिद्ध—क
9 तस्या—क.
10 सम्पदः—क.ख.ग.
11 कान्वेषणेन—क.ग.म.

आर्य ! इतस्तावत् ।

(प्रविश्य नटी[1])

नटी—अय्य एसंह्मि । (आर्य ! एषास्मि ।)

सूत्रधारः—आर्ये ! साधु कृतं भवत्या । यदद्यापि प्रति[2]पालनीयासि ।

नटी— किं वि चिन्तअन्तिए मए[3] खणमेत्तं[4] विलंबिअं[5] ।
[किमपि चिन्तयन्त्या[6] मया क्षणमात्रं विलम्बितम् ।]

सूत्रधारः—किं नु चिन्तापदम् ।

नटी—तुह उत्तिये केणावि कालणेण[7] जामादुणो[8] विप्पलम्भो[9] पसत्तो ।
[तव पुत्र्याः केनापि कारणेन[10] जामातुः[11] विप्रलम्भः[12] प्रसक्तः ।]

सूत्रधारः—मा भैषीः । आचार्यमदनादेशादनुचिन्तनभागिनोः अनयोरचिरादेव भवेत्सा[13]हित्यसक्रमः[14] ।

---

1 'नटी' इति–क.ग. प्रत्योः नास्ति ।
2 'प्रति' इति–ख.ग.घ. प्रतिषु नास्ति ।
3 'मए' इति क प्रतौ नास्ति । म अ–ख.
4 खणामत्त–ख. खणमेतं–क.ग.
5 बिलबिअं–क.ग.
6 चिन्तयत्या–ख.
7 णेय—क. ग.
8 दादुणो—क. ग. म.
9 विदिप्पलेभो—क. ख. विदिप्पलभो—ग.
10 कारेण—ख.
11 जामाता—क. ग. जामातुरपि—ख.
12 विप्रलम्भ—क. ख. ग.
13 भवत्सा—क. म.
14 सक्रमः—ख. ग. घ.

**नटी**—(सहर्षं) तह जदि[1] आणवेदु अज्जो अज्ज कलणिज्जम् [तथा[2] यदि[3] आज्ञापयत्वार्यः अद्य करणीयम् ।

**सूत्रधारः**—प्रख्याते[4]त्यादि पुनः पठति ।

**नटी**—अम्महे अह्माणं धण्णदा किं दु तारिसं[5] रूप्पअं ण पच्चहिजाणामि ।

[अहो ! अस्माकं[6]धन्यता ! किं तु तादृशं[7] रूपकं न प्रत्यभिजानामि ।]

**सूत्रधारः**—(स्मृति[8]मभिनीय) आर्ये ! ननु अचिरेण अध्यापितासि रुक्मिणीमाधवं नाम ।

**नटी**—सुमरिदं मए वि एदं । जस्स कई णिखिलकलाणिक्कलंको वेंकअज्जो इति सुणिअदि ।

[स्मृतं[9] मयापि एतत् । यस्य कविः निखिलकला[10]निष्कलङ्को वेङ्कयार्य[11] इति श्रूयते । ]

**सूत्रधारः**—प्रिये ! सम्यग्[12]ज्ञातं भवत्या ।

---

1 जादि—क. ख.
2 तत्—क.
3 ‘यदि’ इति क प्रतौ नास्ति ।
4 प्रत्याने—ख.
5 तादिसं—क. ख.
6 स्माकं—घ.
7 तादृश—ख. घ.
8 श्रुति—क. ग.
9 श्रुतं—ग.
10 कालं—क. ख.
11 वेङ्कामात्य—घ.
12 संवि—क. ख. ग. म.

यः श्रीरामपुरी[1] विलासवसतिः[2] श्रीरामकारुण्यदृक्-
प्राप्तैश्वर्यपदश्चतुर्दशकलाधौरन्धरी[4] बन्धुरः ।
यस्मिन् विस्मयनीयपावनि[5] कृपोल्लासो वसत्यन्वहं
यं[6] प्राप्यैव रमा समानमधिपं पातिव्रतीं विन्दति ॥६॥

किं च—

यः श्रीमानखिलेष्ट[7] दानविभवो यस्माच्चिदद्वैतकं
जातं कामविलासराघववरव्यायोगकर्ता च यः ।
यल्लीलारचितो महेन्द्रविजयो योऽसौ हनूमज्जय[8]-
प्रादुर्भावखनिर्यतो विरचितं कर्नाटरामायणम् ॥ ७ ॥

नटी—णादं णादं [ज्ञातम्, ज्ञातम्]

(संस्कृतमाश्रित्य[9])

योऽसौ वाबा[10] म्बिकागर्भशुक्तिमुक्तामणिप्रथः[11] ।
यं हम्पयार्यवंशाब्धिकौस्तुभं विबुधा विदुः ॥ ८ ॥

---

1 पुरि—क. ख. ग.
2 वसति—क. ख. ग.
3 पात्रै—क.
4 धुरी—क.
5 पावन—घ.
6 यः—ख.
7 खिले—ख.; खिवेष्ट—ग.
8 ज्जयं—क. ख. ग. म.
9 त्यमाश्रुत्य—ख. ग.
10 यौऽसौबा—क.
11 प्रदः—ख. ; प्रधः—ग.

सूत्रधारः—एवमेवैतत् ।

अस्य प्रसादतस्तूर्णं[1] मधमाम् अधमर्णताम् ।
विहाय विबुधा भेजुः उत्तमामुत्तमर्णताम् ॥ ९ ॥

तदनेन रूपकेण परिष्करोतु[2] भवती[3] रङ्गमन्तरङ्गं च सभासदानाम् ।

नटी—तहा (तथा)

(इति ध्रुवां गायति)

सूत्रधारः—(रसपारवश्यमभिनीय) प्रिये ! अवल[4]म्बस्व माम् ।

यतः—

तव मधुरतरा[5] विभाति गीतिः
तव पदसुस्वरसङ्गतिप्रतीतिः ।
चिरवि[6]रहभृतं[7] यथैव[8] कान्ता-
दयिततमं[9] रतिकान्ततापतान्तम् * ॥ १० ॥

साधु रे ! कुशीलव ! साधु ! ममापि रति[10]कान्तबाणतान्तात्मनः । प्रियोपलम्भसूचिन्या तववचनोपश्रुत्या[11] किञ्चिदाश्वस्तमिव मे हृदयम् ।

---

1 तस्तुर्णं—क. ; तस्स्तूर्णं—ख.
2 परिष्कारो—क.
3 'भवती' इति ख प्रतौ नास्ति ।
4 अविल—क.
5 तरा—इति घ प्रतौ नास्ति ।
6 चिरहि—ख.
7 विरहाभृतं—क.
8 यदैव—ख.
9 दयितम—क. ग.
10 रथि—क.
11 पसृत्या—क. ख.
* अवलम्बते इति अध्याहार्यम् ।

सूत्रधारः[1]—आर्ये ! रुक्मिणीविरहसनाथस्य माधवस्य[2] भूमिमादाय मम स्यालको मणिशेखरो गृहीतदारुकवेषेण सह चम्पकशेखरेण आगच्छति[3] । तदावामपि अनन्तरकरणीयाय सज्जीभवावः[4] ।

(इति निष्क्रान्तौ)

(प्रस्तावना[5])

(ततः प्रविशति माधवो दारुकश्च)

माधवः—अयि ! दारुक ! अपि नाम सत्यमेव स्यात् मां प्रति सुरमुनेः वचनम् । यत्खलु—

वैदर्भात्समजनि रुक्मिणीति कन्या
धन्या या गुणगणवर्णनीयतायाः ।
सा[6] च त्वय्य[7]नुदिनमेधमानभावा[8]
सातङ्कं हृदयमधत्त[9] चैद्यभीता ॥ ११ ॥ इति

दारुकः—आयुष्मन् ! अनृतदूराः खलु तपस्विनां गिरः ।

माधवः—उक्तं च अन्यदपि तेनैव ।

---

1 'सूत्रधारः' इति क. ग. प्रत्योः नास्ति ।
2 'माधवस्य' इति क प्रतौ नास्ति ।
3 गच्छति—क. ख. ग.
4 सज्जीभव—क.
5 'प्रस्तावना' इति क. ग. म. प्रतिषु नास्ति ।
6 सु—ख.
7 त्वय—क.
8 भाव—क. ख. ग. म.
9 धत—क.

दारुकः—

किं तत् ?

सर्वस्वं[1] मदनमहीपतेः, *निषद्या
विद्यायाः, वितरणवल्लरी स्वकेषु ।
लावण्यद्रविणविधानमाप्त[2]बन्धुः
दीनानां, जननयनोत्सवैकमूर्तिः ॥ १२ ॥

किं च—

**आमीलशम्भु[3]नयनानलदीपिताङ्गं
आलक्ष्य संतत[4]निजाश्रयताभिमानात्[5] ।
†आद्यो रसो जनयितुं किमनङ्गमार्तः[6]
[मूर्तो]§भुवीति[7,8] मतिरास तदीक्षकाणाम्[9] ॥ १३ ॥

सत्योऽयं प्रवादः । बहुरत्ना वसुन्धरेति ।[10]

---

* आपणः ** कष्टम् † श्रृङ्गारः § मातृकायां दृश्यमानः 'मूर्तिर्भुवीति मतिरास' इति पाठो अयुक्त इति मन्ये अतः । परिष्करणं कृत्वा श्लोकभागः एवं विपरिवर्तितः ।

1 सर्वस्व—क.
2 आप—ख.
3 शम्बु—ख.
4 सतत—क.
5 पूर्ना—क.
6 मूर्तेः—क.ग.घ.म.
7 भूवीति—क.; भवीति—ख.
8 मूर्तिं भुवीति तदि—म.
9 क्ष्यकानाम्—ख.म.
10 सत्योऽयं... वसुन्धरेति—इति क.ग.घ.म. प्रतिषु न दृश्यते ।

माधवः—
सौहार्दातिशयेन दिव्यमुनिना येयं गुणग्राहिणा
नीता श्रोत्रपथं तथापि वसति प्रत्यक्षमक्ष्णोरिव ।
*[ध्यानच्छेदकृति क्षणेऽपि तनुते] सोत्कण्ठमस्मन्मनो
धातुः सम्प्रति मोदखेदजननी सृष्टिर्मया नम्यते[1]
॥ १४ ॥

इति

दारुकः—सत्यमेतत्[2] । यत्सदृशगुणा सेयं भवतः इति । उक्तं च तस्यैव दिव्य[3]मुनेः अन्तेवासिना कौत[4]स्कुतेन । **'तदेकायत्तचित्ततया तदुपलम्भ[5]प्रतिबन्धरूपरुक्मिकृतचैद्यप्रदित्साश्रवण-व्यथितमना मनाक् अपि सुखमलभमाना सुतरां ताम्यति इति ।'

माधवः[6]—† तदस्याः मनोवृत्तिं रुक्मिणो व्यवसायं चैद्यादिसमारम्भं च[7] विज्ञायागच्छेति[8] अतिगूढतया चारः प्रेषितव्यः ।

---

* 'ख' मातृकायां दृश्यमानः 'ध्यानच्छेदकृतिक्षणेति' इति पाठो युक्त इति न विभावयामि । प्रमादादन्यथा वा दुरुक्त इति निश्चितस्य परिष्करणं कृत्वा श्लोकभागः एवं विपरिवर्तितः ।

** त्वदेकयत्त... त्वदुपलम्भ इति अर्थवत्स्यात् ।

† 'तदस्य' इति सर्वा मातृकापाठापेक्षया 'तदस्या' इति सम्पादने विपरिवर्तितः पाठः युक्त इति भाति ।

1 माधवः—सौहार्दा... नम्यते इति क, ग घ म प्रतिषु न दृश्यते ।
2 सत्यमेतत् इति ख प्रतौ नास्ति ।
3 दि य इ[illegible] त्र प्रतौ नास्ति ।
4 कौतु—घ.
5 लम्ब—क.
6 'माधवः' इति क.ग. प्रत्योः नास्ति ।
7 'च' इति क. ग म प्रतिषु न दृश्यते ।
8 गन्तुं—क.ख.ग.म.

दारुकः—अथ किम् ?

(प्रविश्य प्रतीहारी)

प्रतीहारी—जेदु जेदु भट्टा । वेदब्भदेसादो बह्मणो आअच्छिअ पडिहारे चिट्ठदि ।
(जयतु जयतु भर्ता । वैदर्भदेशात् ब्राह्मणः आगत्य प्रतिहारे तिष्ठति ।)

उभौ—शीघ्रं प्रवेशय ।

प्रतीहारी—तहा (तथा) । (इति निष्क्रान्तः)

(ततः प्रविशति ब्राह्मणः)

ब्राह्मणः—अहो चिरेण नयनोत्सवः ।

नवकुवलयच्छायः कायः, कटाक्षपरम्परा
जनयति नभःपङ्केजातावलीसरविभ्रमम् ।
अवयवनिवेशोऽयं धन्यं तनोति चतुर्मुखं
मदनजनन[1]प्रोद्यद्घोणाक्षरव्यथिताशयम् ॥ १५ ॥

(इति उपसर्पति)

माधवः[2]—(सविनयम्) ब्रह्मन् ! अभिवादये ।

(इति यथोचितं उपवेशयति)

ब्राह्मणः—वि[3]जयतां देवः ।

---

1 जन—क.ख.
2 'माधवः' इति ख प्रतौ नास्ति ।
3 'वि' इति ग प्रतौ नास्ति ।

उभौ—अनुगृहीतौ[1] स्वः[2] । किन्त्वागमनकारणमाज्ञाप्यताम् । यत्करणेन[3] वयं कृतार्थयिष्याव[4] [5]आत्मानम् ।

ब्राह्मणः—(सानन्दम् )

सन्तः समुच्छ्रयदशाभरणेऽपि नम्राः
सम्यग्दधत्यनुपमोन्नतिसम्पदन्ते ।
सम्पत्स्यते[6] जगति किं नु घनाघनस्य
वर्षासु नानतदशाभृतिरुच्छ्रयाय ॥ १६ ॥

आगमनकारणन्त्वेषा पत्रिकैव प्रकटयति ।

(दारुकः सानुनयं पत्रिकां गृहीत्वा माधवाय समर्पयति)

माधवः—(वाचयति) 'स्वस्ति । समस्तजगत्प्रशस्तयशोवृन्दस्य सन्नम्रगुणगण[7]प्रकटिता[8]नन्दस्य[9] निरवद्यशौर्यरमाधवस्य माधवनाम्नो यादवाधिपस्य चरणानतशिराः विज्ञापयति रुक्मिणी नाम विदर्भराज[10]दुहिता ।

---

1 गृहीताः—ख.ग.घ.
2 स्मः—ख.ग.घ.म.
3 यत्करुणय—क.ग.
4 यिष्यास्म—क.ग.घ.म.
5 'स्वात्मानम्'—ख.घ.
6 सम्पद्यते—क.
7 गणानन्द—क.
8 तस्य—क.
9 'आनन्दस्य' इति क प्रतौ नास्ति ।
10 'राज' इति क प्रतौ नास्ति ।

यावत्सुरर्षि[1]वरवर्णिततावकीन-
लावण्यपुण्यगुणलुब्ध[2]हृदं, त्वदीयाम् ।
नायाति चैद्यहतकः स्वकरुक्मिसाह्यात्
आगत्य तावदत्र मामनुपेक्षणीयाम् ॥ १७ ॥

किञ्च

मन्ये मृगेन्द्रतरुणीमिव तावकीना-
मन्योऽपहर्तुमसमर्थ इति क्षितौ माम् ।
दूये तथापि दुरुदाहररुक्मिसाह्या-
दायाति चैद्य इति वादवशाज्जनानाम् ॥ १८ ॥ इति '

(सावष्टम्भम्)

अयि ब्रह्मन् !

सोऽहं[3] विमथ्य[4] परमण्डलवारिराशिं[5]
ऊहापथातिग[6]महापरिणाह[7]पात्रम् ।
आदाय तामनुदितान्यजना[8]भिलाषा
मायामि लब्धसुधयाक्षिधवप्रशस्तिः[9] ॥ १९ ॥

दारुकः—सम्यगाज्ञप्तं देवेन ।

---

1 सुरऋर्षि—क.
2 लब्ध—क.
3 सोऽयं—घ.
4 'विमथ्य' इति ख. म. प्रत्योः नास्ति ।
5 वारिं—क.ग.घ.
6 रिग—घ.
7 णाम—ख.
8 जला—ख.
9 प्रशस्तिम्—ख.ग.घ.म.

ब्राह्मणः—तदेतदेव भर्तृदारिकायाः कर्णरसायनी[1]कुर्मः ।

(इति ससम्भ्रमं निष्क्रान्तः)

माधवः—अये ! दारुक ! सन्नह्यतां बलानि बलदेवाधिष्ठितानि । त्वमपि सज्जीकृतं समरोचितं रथमानय ।

दारुकः—तथा ।

(इति निष्क्रम्य, प्रविश्य)

यथादिष्टं[2] तथैव कृतम् । आरोहतु रथं आयुष्मान् ।

(माधवः दारुकेण सह आरोहणं नाटयति)

माधवः—दारुक ! सञ्चोदया[3]श्वान् ।

(दारुकस्तथा करोति)

(रथवेगं निरूप्य)

अतिचित्रमेतदासीत्
अतएव यदत्र वाजिवेगेन ।
यत्र मनोरथवृत्तिः
तत्र रथस्यापि वृत्तिरिति ॥ २० ॥

दारुकः—(रथवेगं नियम्य) आयुष्मन् । इय[4]मेव भीष्मकपुरी ।

---

1 यिनी—ख. 3 सम्बोधया—घ.

2 विष्टं—क. 4 इद—क.

यत्र खलु—

प्राकारसौधखचितोज्ज्वलरत्नजाल-
शोभाविसारपरिकर्मितदिग्वि[1]भागा ।
नूनं तनोति गगनेऽपि विचित्ररूप-
मानन्दनं नयनयोर्यददृष्टपूर्वम् ॥ २१ ॥

माधवः—तदस्याः[2] पुनरुद्याने विश्रम्य पुरोदन्तं उपलप्स्यामहे, यावदागमनमार्यस्य ससैन्यस्य ।

दारुकः—यथाऽऽज्ञा[3]पयति आयुष्मान् ।

(इत्युभौ रथावतरणं नाटयतः)

माधवः—सूत ! यावदत्र पुरोद्याने विश्राम[4]सुखमनुभवामि, तावदास्तामत्रैव स्यन्दनम्* ।

दारुकः—तथा (इति अश्वान् बाह्यतरुमूले बध्द्वा पुरो भूत्वा) आयुष्मन् ! इतइतः ।

(माधवः परिक्रम्योद्यानप्रवेशं नाटयित्वा)

दारुकः—आयुष्मन् । अतीव रमणीयोऽयमुद्देशः ।

---

* रथम् ।

1 स्व—क.
2 तदस्मिन्—च.
3 यदाज्ञा—घ.
4 श्रम्य—क.ग.म.

तथा हि—

आनम्रपक्कफलभारव्रहस्व[1]शाखाः
*मारन्द[2]सारनिरतश्रवणा[3]तिरेकाः ।
आगच्छति त्वयि चिरादतिथौ किमर्घ्य-
मातन्वते सफलमित्यनुसन्दधामः[4] ॥ २२ ॥

किञ्च—

**माकन्दमञ्जुलमरन्दरसप्रसार-
सामोदसंवहनशीतलशीकरोऽयम् ।
आगत्य गन्धवह एष विशेषबन्धु-[5]
मालिङ्गतीव शुभवन्तमसौ भवन्तम् ॥ २३ ॥

माधवः—तदत्र तरुतले[6] विश्रामसुखमनुभवावः[7] ।

(नेपथ्ये)

समुदग्रबलः स चेदिनाथः
सजरासन्ध[8]कलिङ्गसाल्वसाह्यः ।
परिणेतु[9]मना विदर्भकान्यां
पुरमागच्छति रुक्मिचोदनेन ॥ २४ ॥

---

* मारन्दः = मधु

** माकन्दः = आम्रः, मरन्दो मधु

1 ह्रास्व—क. घ.
2 नन्द—क. ख. ग.
3 श्रमणा—क. ख. ग.
4 धानः—घ.
5 बन्धुः—क. ख. ग. म.
6 मूले—घ.
7 भवामः—घ.
8 सचिरानन्द—क. ग. म.
9 परिणीतु—क. ख. ग. म.

उभौ—अहो ! महानुपक्रमो विदर्भकुलकलङ्कस्य ।

(पुनर्नेपथ्ये)

अचिरोपनते करग्रहे
समुदाचारवशंवदा वधूः[1] ।
उपवन्युपकण्ठचण्डिका-
गृहमायाति*चिरिण्टिकागणैः ॥ २५ ॥

माधवः—दारुक ! विचित्रमिव संविधानम्[2], यदनायासमेव सदेशागमनं मनोरथप्रियायाः । तद्वयं पुर एव चण्डिकायतने क्वचिन्निलीनाः यथासमयं यतिष्यामः । (इति चण्डिकायतनप्रवेशं नाटयित्वा स्तम्भान्तरितौ तिष्ठतः ।)

(ततः प्रविशति रुक्मिणीसखी च)

रुक्मिणी—सहि ! दूलदो एव्व वट्टदु सव्वो जणो । जंपत्तणीया देवी णिउणं मये ।

(सखि ! दूरत एव वर्ततां[3] सर्वो जनः । यत्प्रार्थनीया देवी निपुणं मया ।)

---

* अयं शब्दः चिरण्टिकेति प्रख्यातः । परिणीता किञ्चिल्लब्ध-यौवना चिरण्टी ।

1 वध्वः—क.  3 वर्तन्तां—ख.

2 विदानं—क. ग.

**सखी**—तहा (तथा ।) (इति निष्क्रम्य पुनः प्रविश्य) भट्टिदारिए ! जहाणत्तं तहा किदएव्व । (भर्तृदारिके ! यथाऽऽज्ञप्तं तथा कृतमेव ।)

**रुक्मिणी**—(अञ्जलिं बध्वा) अयि ! पुरहरशरीरार्धरूपिणि[1] ! प्रसीद ! (इति प्रणम्य, सखीं प्रति सास्त्रम्[2]) सहि ! समुदाचारो एसो पसादनोवण्णासो । जं मं जम्मंदलाविहिद सुकम्म निम्माणं रक्खिदुं देवीविअ ण सक्कुणादि । (सखि ! समुदाचार एषः[3] प्रसादनोपन्यासः । यन्मां[4] जन्मान्तराविहितसुकर्म-निर्माणां रक्षितुं देव्यपि न शक्नोति ।)

**सखी**—(सकरुणम्) हला ! देवेण रक्खिदव्वासि ण खु एतादिरिसा-आकिदिविसेसा मंदभाइणो होंदि ।

(हला ! देवेन रक्षितव्यासि । न खल्वेतादृशाकृतिविशेषाः मन्दभागिनो भवन्ति ।)

**रुक्मिणी**—(निःश्वस्य) मिच्छारूवदालिणीं मं उद्दिसिअ किं णु पसंसणं करेसि ?

(मिथ्यारूपधारिणीं मां उद्दिश्य किं नु प्रशंसनं करोषि ?)

(संस्कृतमाश्रित्य)

---

1 रूपिणी—क. ग. म.
2 सास्त्रम्—इति क. ख. ग. म. प्रतिषु नास्ति ।
3 येषः—ख.
4 जन्म—क.

यत्सौकुमार्यमितरासुलभं लतायाः[1]
यच्चाभिवृद्धिकरणं द्युतिधारणं यत् ।
तत्सर्वमेव सफलं[2] भविता तदानीं
यत्रानुरूपसहकारतरूपगूहः* ॥ २६ ॥

माधवः—(स्वगतं) अहो ! रूपसम्पत्[3] ।

**शुचेराधारत्वान्मदनपुनरुज्जीवनकृते
रसस्याविर्भावः किमिह †वनिता[4]भूयमयतः ।
अनङ्गस्याज्ञामप्यवनितलमानेतुमुदिता
जगज्जेत्री शक्तिः[5] जयति नवचूताङ्कुरमयी ॥ २७ ॥

(इति सविस्मयं[6] पश्यति)

दारुकः—अहो ! रूपसम्पदानुरूप्यमनयोः ।

---

* उपगूहः आलिङ्गनम् ।

** शुचेः रसस्य शृङ्गारस्य ।

† वनिताभूयं वनिताभावं अयतः गच्छतः ।

1 लयाः—ख. म, लयाय—ग.

2 सफला—ख.

3 'अहो ! रूपसम्पत्' इति ग प्रतौ नास्ति ।

4 वलिता—ख; मयता—म.

5 'शक्तिः' इति ख प्रतौ नास्ति ।

6 विनयं—क.

तथाहि—

अचञ्चलश्रीरियमेव चञ्चला,
घनाघनोऽयं निरपाय[1]रूपभृत् ।
विधातुरेतद्घटनानु[2]चिन्तनं[3]
व्यनक्ति रागश्च विविक्तमेलनम् ॥ २८ ॥

माधवः—अयि ! प्रिये ! तवापि रूपसम्पन्मिथ्येति[4] सर्वप्रमाणविरोधि वचनमेतत्—

नवकुवलयच्छायं[5] चक्षुर्विधुप्रतिमं मुखं
समइव[6]समावेशो भाति स्फुटं कुचकुम्भयोः ।
करपदमपि प्रायश्चूतप्रवालदलारुणं
नभ इव तनुर्मध्यः किं वा ब्रुवे मधुरं वपुः[7] ॥ २९ ॥

सखी—हला ! किण्णु चित्तिदव्वं जं बह्मणो माहवो आअमिस्सदि ति दाणिं एंव आदिट्ठवत्तो । (हला ! किन्नु चिन्तितव्यं यद्-ब्राह्मणो 'माधव आगमिष्यति' इतीदानीमेवादिष्टवान् ।)

रुक्मिणी—किण्णु एदेण दावाणलसन्निहाणे वलिसाणु चिद्दणेण । (किन्नु एतेन दावानलसन्निधाने[8] वर्षानु[9]चिन्तनेन ।)

---

1 रवाय—ग.
2 नारु—क. ग. म.
3 चिन्तनुं—क. ग.
4 न्निध्येति—क. घ.
5 च्छायां—क. घ.
6 समयिव—क. ख. म.
7 किं वा...वपुः इति क प्रतौ न दृश्यते ।
8 संविधाने—घ.
9 वर्षासु—क.

**सखी**—एवञ्वि अहिमुहेण विहिणा सुहोदक्कं हविस्सदि एवं ।
(एवमप्यभिमुखेन विधिना[1] शुभोदर्कं* भविष्यत्येव ।)

**दारुकः**—आयुष्मन् ! सत्यमेव ब्राह्मणवचनम् ? ।**

**माधवः**—अथ किम् ?

**रुक्मिणी**—कहं सुहोदक्कत्तणं एदस्स संदावस्स जं पडिपक्खो बलवत्तो सिसुवालहदओ आअच्चिअ वट्टदि । मति बाधा रुक्मि तस्सिएंव अणुरत्तो वट्टदि । तं दा हदंह्मि असुवतंत्ततणं पडिवाद एण स्त्रीत्तणणेण ।
(कथं शुभोदर्कत्वम् । एतस्य सन्तापस्य यत्प्रतिपक्षो बलवान् शिशुपालहतक आगत्य वर्तते । मम भ्राता रुक्मी तस्मिन्नेव अनुरक्तो वर्तते । तत् हा ! हतास्मि अस्वतन्त्रत्व[2]प्रतिपाद केन स्त्रीत्वेन ।) (इति बाष्पं विकरति)

**सखी**—मा एंव भण[3] ण खु तारिस सच्चपडिणस्स माहवस्स वअणं अण्णहा होदि ।
(मैवं भण[4] । न खलु तादृशसत्यप्रतिज्ञस्य माधवस्य[5] वचनमन्यथा भवति ।)

(इति पटाञ्चलेनाश्रूणिविमृजति)

---

* शुभोदर्कः मङ्गलान्तम् ।
** अयं प्रश्नः ।

1 विधिन—ग.
2 'त्व' इति घ प्रतौ नास्ति ।
3 भणदि—क. ख. ग.
4 भणति—क. ख.
5 'माधवस्य' इति क प्रतौ नास्ति ।

माधवः—किमद्यापि विलम्बेन । यावत्प्रकटयाम्यात्मानम् ।

(इत्युपसर्तु[1]मिच्छति)

दारुकः—द्रष्टव्यमुपर्यपि विस्रम्भ[2]विलसितम् ।

(इति माधवमाकर्षति)

(नेपथ्ये)

कुतकौतुमङ्गलाय दातुं
यतते स्वां तनयां स चेदि[3]भर्त्रे ।
तनयानुमतो विदर्भनाथः
क्रियते किन्विह कन्यया[4] विलम्बः ॥ ३० ॥

(सर्वे आकर्णयन्ति)

रुक्मिणी—सुदं सोदव्वम् । (श्रुतं श्रोतव्यम् )
(इति सखीमालिङ्ग्य) सहि ! दाणिं किंणु कादव्वं जं विहिरवि पडिवाचारो ।
(सखि ! इदानीं किन्नु कर्तव्यम् । यद्विधिरपि प्रतीपाचारः ।)*

सखी—हला खणमेत्तं धेरंगिण्हिअ पडिवालणिज्जो महावो । (हला ! क्षणमात्रं धैर्यं गृहीत्वा प्रतिपालनीयो** माधवः ।)

---

* प्रतीपाचारः प्रतीपं विरुद्धं आचरतीति विरुद्ध धर्मेत्यर्थः ।

** प्रतिपालतीयो निरीक्षणीयः ।

1 सर्पतुमि—क. ख. ग.
2 विश्रम्भ—क. ख. ग.
3 चेति—ख. ग. म.
4 कन्यका—क.

क्मिणी —जदि अंगाणं पहवामि । (यद्यङ्गानां प्रभवामि ।)

(इति मोहमुपगच्छति । सखी सबाष्पं, पटाञ्चलेन वीजयति)

**माधवः**—दारुक ! तूर्णं प्रतिहारान्तरेण रथमानय ।

**दारुकः**—तथा (इति निष्क्रम्य, पुनः प्रविश्य)

अयं रथः । (इति हस्तेन दर्शयति)

**सखी**—कोणु सरणम् । का गइ । कस्सवा कहइस्से । (को नु शरणम्* । का गतिः । कस्य वा कथयिष्ये ।)

(इति स्वयमपि मोहमुपगच्छति)

(माधवदारुकावुपसृत्य रुक्मिणीं सखीं चादाय रथोपरि निवेश्य स्वयमपि रथारोहणं नाटयतः)

**माधवः**—सूत ! सञ्चोदयाश्वान् ।

(दारुकः तथा करोति)

(नेपथ्ये)

दलन्नीलाम्भोज[1]व्यतिकरपरिस्पर्धिवपुषा
रथान्नीता केनाप्यसमशरसम्मोहनपुषा ।
कथं[3] कन्या सेयं कथय कथया**भीक्ष्णमभितः
समागत्य स्वैरं पथि समुपरुन्धन्तु बलिनः ॥ ३१ ॥

---

* शरणं रक्षिता इति ।

** असकृत—पुनः पुनः इति ।

1 निदर्श—क. ग.

2 व्यलि—ग; पुषः—म.

3 पथं—ख. ग. घ. म.

माधवः—रुक्मिणीसहचरीणामेतत् । यावत्समतीत्य प्रमदवनं समरोचितां भुवमवतरामः । (इति वननिर्गमनं नाटयित्वा) कथमद्यापि न प्रतिबुद्धा । (हस्तेन हृदयमुपस्पृशति)

रुक्मिणीसख्यौ—(चक्षुषी उन्मील्य) कहं रहोपरि वट्टामहे । (कथं रथोपरि वर्तामहे ।) (इत्यन्योन्यमालिङ्गतः) णूणं णीद्धम्मो सिसुवालहदएण । किं णु दाणिं कादव्वं । अण्णोण्ण वेणीहं एवं उब्बद्धणं कलिअ पाणा विस्सज्जअम्म । (नूनं नीताः स्मः शिशुपालहतकेन । किन्नु इदानीं कर्तव्यम् । अन्योन्यं वेणीभ्यामुद्बन्धनं कृत्वा प्राणान्[1] विसृजावः[2] ।)

(इति व्यवस्यतः)

दारुक—अयि ! विदर्भनन्दिनि ! नायं शिशुपालः । किन्तु तव मनोरथप्रियो माधव एव ।

रुक्मिणी—(सखीं प्रत्यपवार्य) कहं मच्चिन्तिदोवणदो सुहासारो । (कथमचिन्तितोपनतस्सुधाऽऽसार*:)

सखी—अच्चरिअं ! दाणिं एव माहवागमणत्ति । (आश्चर्यम् ! इदानीं एवं माधवागमनमिति)

(इति रुक्मिणीमालिङ्गति । रुक्मिणी हर्षपारवश्यं नाटयति)

---

* आसारः धारासम्पातः ।

1 प्राणाः—घ.

2 विसृज्यन्तं—क. ख; विसृजन्तं—ग.

माधवः—आस्तामस्याः केलिः, कस्तामाशंसितुं पुनश्शक्तः ।
पाटीरद्रवभरितः[1] स्पर्शस्तापायितुं प्रस [क्तोऽस्याः]*
॥ ३२ ॥

(इति निश्चलः तिष्ठति)

रुक्मिणी—(सखीं प्रत्यपवार्य) अंगाणअणीसह्मि । मां धारेसु ।
(अङ्गानामनीशास्मि । मां धारयस्व)

(सखी तथा करोति)

(नेपथ्ये)

विनियुज्य विदर्भराजसूनुं
पृतनामेलनकर्मणि प्रकोपात्[2] ।
अयमेव रणाय चेदिभूपः
स्वयमभ्येति वधू[3]हृतं निरुध्य[4] ॥ ३३ ॥

(रुक्मिणीसख्यौ सदैन्यमालोकयतः)

माधवः—(अनाकर्णितकेन[5] आस्तामित्यादि पठति)

दारुकः—आयुष्मन् । इतः पश्य—

---

* मातृकासु दृष्टः प्रसक्त्येष इति पाठः अशुद्ध इति भाति ।
1 भरीतः—ख.
2 प्रलापात्—क; प्रथिगात्—ग.
3 'वधू' क.ग.म. प्रतिषु नास्ति ।
4 विरुध्वं—क; विरुध्दं—ग.म.
5 कर्नितकेन—क. ख.

उद्दामदर्पपरिसर्पणपारवश्या-
दुज्झित्य यूथ[1]मिव वन्यवराह एषः ।
अभ्येति भीष्मकसुताहरणाद्भवन्त-
मभ्यर्णगेऽपि[2] परिपन्थिनि को वितर्कः ॥ ३४ ॥

(इति उद्बोधयति)

रुक्मिणी—हला ! अज्जवि किंणु विलंबेण जं चेदिसरो बलवतो खु सुणअदि । ता पुव्वोद्दिट्ठेण एवं उवाएण णिव्वुदि अह्माणो । (हला ! अद्यापि किन्नु विलम्बेन । यच्चेदीश्वरो बलवान् खलु श्रूयते । तत्पूर्वोद्दिष्टेनैवोपायेन[3] निर्वृतिरावयोः)

सखी—जहि पलाहवं ण गच्चदि शिशुपालहदओ । (यदि पराभवं न गच्छति शिशुपालहतकः ।)

माधवः—(चक्षुःप्रसार्य खड्गं स्पृशन्) भगवन् ! शस्त्र !

मदवद्रिपुभद्रदन्तिकूटो-[4]
न्मथ[5]नाडम्बरशम्बसम्भ्रमेण ।
कथमद्य विलम्ब्यते[6] त्वयैवं[7]
कृतकंसादिनृशंसहिंसनेन[8] ॥ ३५ ॥

(नेपथ्ये)

---

1 यूष—ख.
2 गेऽति—क. ग. म.
3 पायेनैव—म.
4 कुटो—क. ख. घ.
5 न्मद—ख.ग.घ.म; न्मर—क.
6 'विलम्ब्यते' इति मातृकापाठः
7 त्वयैकं—ग.
8 सपांसनेन—क. ग.

शस्त्रं शस्त्रं याति यात्येष भर्तः[1]
क्वायं क्वायं *वारवाणः कृपाणः ।
गन्ता गन्ता राजकन्यापहारी
चोरश्चोरस्ताड्यतां पीड्यतां च ॥ ३६ ॥

**दारुकः**—शिशुपालानुचराणामेतत् ।

(पुनर्नेपथ्ये)

**सन्धामेष प्रथयति जरासन्धनामास्य बन्धुः
साह्यं[2] कर्ता नयनविगल[3]द्विस्फुलिङ्गः कलिङ्गः ।
वैदर्भोऽयं व्रजति सहसा साल्वसाहाय्य[4]दक्षः
चेदीशोऽयं जयति जयति च्छिन्नभिन्नारियूथः ॥३७॥

**रुक्मिणीसख्यौ**—(सभयम्) किं णु करेह्मः । (किन्नु कुर्मः)

**दारुकः**— आयुष्मन् ! इयमेव वेला पराक्रमस्य ।

**माधवः**— इदानीमेव सञ्जातमिष्टवस्तूपलम्भनम् ।
अनिष्टपरिहारोऽयमरिमण्डलखण्डनम् ॥ ३८ ॥

(रुक्मिणीं प्रति) अयि ! प्रिये ! किमिहापि वैक्लव्यं[5] नाम ।

---

* वारवाणः तनुत्रं, कवचम् ।

** सन्धा प्रतिज्ञा

1 भवान्—क.
2 साह्यं—क.
3 युगल—घ.
4 सहिय्य—क.म; साहाय—ग.
5 वैक्लव्यं—ख. ग. घ. म.

आयातु चैद्यशतमस्तु सहायतास्य
मायाविसाल्वकक्कलिङ्गजरासुतादिः ।
कायासमेति मम शस्त्रमिदं मदेन[1]
कोऽयं, रवेस्तिमिरखण्डनमप्रयत्नः ॥ ३९ ॥

दारुकः—एवमेवैतत् ।

(ततः प्रविशति उत्खातखड्गो रथेन[2] शिशुपालस्सूतश्च)

सूतः—अयमेव प्रतिपक्षरथः (इति निर्दिशति)

शिशुपालः—रे ! रे यदुकुलकलङ्क ! प्रसह्य राजकन्यां प्रगृह्य कुत्र[3] वा गच्छ[4]सि । अयमहम्—

विदलय्य मनश्च[5] वारवाणं
विघट[6]य्याशु मनो[7]रथं रथं च ।
रचयामि पलायनं तवारा[8]-
दचिरेणैव न *फल्गु **संविदे [षा][9]† ॥ ४० ॥

---

* निर्बला ।

** प्रतिज्ञा

† सर्वासु मातृकासु दृष्टः संविहन् तथा संविदेहां इति पाठः अशुद्धः इति भाति ।

1 वधेन—ख.
2 रथे—क. ग. घ.
3 कुत्रै—क. ग. घ.
4 आगच्छ—क. ग. घ.
5 मदनश्च—क.
6 विघटै—घ.
7 वधे—क.
8 तहिरा—क; तदारा—ख; कदारा—घ.
9 संविहान्—क; संविदेहां—ख. ग. घ. म.

**माधवः**—(सहासं) सत्यमेतत् । यत्पलायनं रचयामीत्यादि । (सक्रोधम्) शृणु ! रे ! मूर्ख !

शंसन् भवान् स्वय[1]मपारसदप्रकारः
कं सम्प्रसह्यति[2] भवानविदन्दचक्षुः* ।
ध्वंसं प्रपद्य रणसीमनि दुर्निवारं
कंसं प्रपश्यति[3] मदीयकलासि[4]लीढः ॥ ४१ ॥

**दारुकः**—अयमेवावसरो विरोधिविपाटनस्य ।

(रुक्मिणीसख्यौ ससाध्वसं पश्यतः)

(नेपथ्ये कलकलानन्तरं)

स बलस्सबलस्समेत्य तूर्णं
सजरासन्धविदर्भसूनुसैन्यम् ।
विरचय्य पलायितं[5] तदेत-
द्विचिनोत्येव विजेतुमद्य चैद्यम् ॥ ४२ ॥

**शिशुपालः**—(सूतं प्रत्यपवार्य) रणदुर्मदाः खलु यादवाः । वयमसहायाश्चेदिदानीं यदुचितं क्रियतां भवता[6] ।

---

* अस्पष्टोऽर्थः ।

1 वय—घ.
2 प्रपश्यसि—म.
3 प्रपस्यसि—क. ग. म.
4 कलानि—घ.
5 पलायतं—क. ख. ग; पलायनं—घ.
6 भवतां—घ.

सूतः—आयुष्मन् ! किमन्यत्पलायना[1]दस्ति[2] तनुत्राणम् ।

(इति रथेन सह निष्क्रान्तौ)

माधवः—कथं गत एवैषः । तत्त्वमपि त्वरयाश्वान् ।

दारुकः—किं पलायित[3]कलहेन । कृतकार्या वयं पुरीमेवोपगच्छामः ।

रुक्मिणीसख्यौ—दिट्ठिया वड्ढामहे । (दिष्ट्या वर्धामहे ।)

(इत्यन्योन्यमालिङ्गतः)

(नेपथ्ये)

अर्थो यथा प्रमादादविवेकिन एष शत्रुरप[4]यातः ।
नेतुः वशगा कन्या दातुः पुंसो यशःप्रशस्ति[5]रिव
॥ ४३ ॥

माधवः—विजयमुदितानामस्मद्बलानामेतत् । तत्त्वरय रथं पुरीगमनाय ।

दारुकः—न विदित एव आयुष्मता रथवेगः[6] । येन वयमागता एव आत्मपुरोपकण्ठम् ।

रुक्मिणी—(सखीं प्रति) अह्महो । दाणिं आअदा एंव पुरंति भणदि सालहिए । (अहो ! इदानीं आगता एव पुरमिति भणति सारथिः ।

---

1 'पलायानात्'—इति क. ग. प्रतौ नास्ति
2 नास्ति—क. ग.
3 पलायत—घ.
4 शत्रुरुप—क. ग.
5 प्रशस्ते—क. ग. म.
6 'रथवेगः' इति क. ग. घ. प्रतिषु नास्ति ।

**सखी**—अह इं (अथ किम् ? )

(प्रविश्य पटाक्षेपेण ब्राह्मणः)

**ब्राह्मणः**—देव ! एष विदर्भराजो बलदेवेन कृतसौहृदः प्राप्तो भवतो विवाहोत्सवविधानाय ।

**उभौ**—प्रियं नः ।

**रुक्मिणी**—कहं पुव्वसन्देसहारी बंह्मणो एसो । (कथं पूर्वसन्देशहारी ब्राह्मण एषः ।)

**सखी**—अह इं (अथ किम् ?)

(इति सर्वे रथावतरणं नाटयन्ति)

**माधवः**—ब्रह्मन् ! अभिवादये ।

**ब्राह्मणः**—विजयतां महाराजः ।

रिपुबल[1]जलधिं विधूय सेयं
सपदि कृता भवता[2] वशे मृगाक्षी ।
प्रमुदितहृदयेन निर्विशङ्क[3]
मधुमथनेन यथा सुधाब्धिकन्या ।। ४४ ।।

**माधवः**—सर्वोऽप्यत्रभवत्प्रसाद एव ।

---

1 जय—घ.
2 भवतां—क.
3 निर्वितङ्कं—क.

(नेपथ्ये)

भो ! भोः ! पौराः ! एवं खलु बलदेवः समाज्ञापयति—

सिच्यन्तामभितोऽपि चन्दनरसैरन्तर्बहिः सद्मनां
मुक्तामञ्जुलरङ्गवल्लिरचना सर्वत्र सन्धीयताम् ।
बध्यन्तां[1] मणितोरणानि निबिडं *सत्रा नवैः पल्लवै-
रद्यै[2] वाशु करग्रहः प्रभवतु[3] श्रीरुक्मिणीकृष्णयोः
॥ ४५ ॥

माधवः—पुरीं प्रविष्टस्यार्यबलदेवस्य उत्साहविलसितमेतत् । तद्वयमपि विदर्भराजादीन् सम्भावयामः ।

(सर्वे रथारोहणं नाटयित्वा निष्क्रान्ताः)

(ततः प्रविशति नारदः शिष्यश्च)

नारदः—वत्स ! कौतस्कुत ! अद्य खल्वस्मत्संविधानस्य फलमासीत् ।

कौतस्कुतः—सत्यमेवैतत् । यदनुरूपदाम्पत्यमुदितयोः रुक्मिणीमाधवयोरवलोकनं नाम ।

---

* सहेत्यर्थः ।

1 ध्यन्ता—ख.ग.

2 रथ्यै—क.

रथे—ग.

3 प्रविशतु—क.ग.

प्रदिशतु—घ.

प्रविशता—ख.

नारदः— लावण्यसान्यापि विदर्भकन्या
लक्ष्मीरिवाद्याभवदेव धन्या ।
या माधवेनाखिलवल्लभेन
पाणिग्रहानुग्रहभाक्कृ[1]तासीत् ॥ ४६ ॥

(नेपथ्ये)

यः कंसादिनृशंसदर्पदलनादाविष्कृतप्राभवो
*यस्यापाङ्गविलोकमात्रविक[2]सल्लक्ष्मीविलासा वधूः ।
तदूद्वाहमहोत्सवो विजयते तेन प्रजाः श्रूयता-
मद्य प्रोद्यदनन्तरायविभवं जातं जगन्मङ्गलम् ॥४७॥

नारदः—वत्स ! प्रवर्तते[3] महानुत्सवः । आवामपि माधवपार्श्ववर्तिनौ भवावः ।

(इति निष्क्रान्तौ)

(ततः प्रविशति सब्राह्मणो माधवः रुक्मिणी सखी च)

माधवः—ब्रह्मन् ! सफलोऽस्मन्मनोरथस्सहायेनात्रभवतः । तत् पादवन्दनाय पित्रोरुपकण्ठं ग[4]च्छामः ।

ब्राह्मणः— (रिपुबलजलधिमित्यादि पुनः पठति)

(रुक्मिणी शृङ्गारलज्जां निरूपयति)

---

* 'यच्चापाङ्ग' इति मातृका पाठः न युज्यत इति भावयामः ।

1 भ्रातृ—ख.
2 विल—ग.
3 वर्तते—घ.
4 उपग—ख.ग.घ.

सखी—हला ! सम्भावेहि प्रियसंसणदण्णं ब्रह्माणं । [हला ! सम्भावय प्रियशंसनधन्यं ब्राह्मणम् ।]

(रुक्मिणी मुक्ताहारं ददाति)

ब्राह्मणः— (गृहीत्वा सहर्षं, माधवं प्रति)

किं ते भूयः प्रियमुपहरामि ।

माधवः— ब्रह्मन् ! समासादितमेव सर्वमाशास्यमत्रभवत्साह्येन ।

अन्योन्यसन्देशनिवेदनेन[1]
धन्योऽसि मान्योऽसि[2] च पूर्वमेव ।
वैवाहिकं कर्तुमिहोपयातः
को वा त्वदन्योऽस्ति कृपावदान्यः ॥ ४८ ॥

तथापीदमस्तु भरतवाक्यम् ।

भवत्वदुर्भिक्षपदा[3] धरित्री
भजन्तु नाथं विबुधा रसज्ञम् ।

---

1 वेशनेन—क.ग.म.
3 पदं—क.ख.ग.म.
2 न्योपि—क.ख.ग.

अचञ्चला नित्यकलासमृद्धि[1]-
र्जयत्वपारोत्सवसम्प्रसारः ॥ ४९ ॥

(इति निष्क्रान्तास्सर्वे)[2]

इति श्रीवेङ्कामात्यविरचितो रुक्मिणीमाधवाङ्कस्समाप्तः

---

1 समृद्धी—ख.ग.

2 'इति–सर्वे' इति—क.ख.ग.म. प्रतिषु नास्ति ।

## * रुक्मिणीमाधवाङ्कस्य अकारादिश्लोकानुक्रमणी *

---

# * नाटकान्तर्गतसुभाषितानि *